# जटामणि

श्री विघ्नेशमहं नत्वा गुरुं सर्वावधानिनम्
जटामणिं प्रवक्ष्यामि श्रीजटा वल्शभैः समम्  १
शिक्षादिशास्त्रमखिलं प्रसमीक्ष्य
सम्यग्वेदार्थलक्षणविदां सुखबोधनाय
नेमानभैरवबुधेन मणिर्जटाया संकाश्यते परशिवस्य
कृपा कटाक्षात्  २
यस्य जिह्वामुखे वाणी वेदशास्त्रमधी सदा
नृतं करोति माता तं वेङ्कटेशं नतोऽस्म्यहम्  ३
यस्येश्वरस्यादिवरस्य पुत्र्याः सहैक्यमद्वैतनतीव सत्यम्
आनन्दयत्यत्र भवज्जनानां तं शङ्करं लोकगुरुं नतोऽस्मि
४
प्रातिशाख्यादिशास्त्रज्ञस्सर्वशिक्षाविशारदः
सूक्ष्मबुद्धिसमर्थो यस्सजटां वक्तुमर्हति  १
जटां हित्वा विचित्रार्थामनुलोमादिकं वदन्
स वै नरकमाप्नोति स्वरवर्णविलोपिवत्  २
अस्याः प्रमाणं प्रथमे प्रातिशाख्ये प्रपाठके
रेफादेशेऽपि शब्दाच्च न धामेत्यार्षशब्दतः  ३
जटायां पञ्चधा सन्धिरार्षपौरुषभेदतः
आद्यन्तमार्षसंज्ञेयं श्लिष्टमन्यत्तु पौरुषम्  ४
त्रिक्रमेष्वष्टधा सन्धिर्द्वौ द्वावाद्यन्तयोरपि
आर्षसंज्ञास्त एवात्र सन्धयोन्येत्वनार्षकाः  ५
पदद्वयमनुक्रम्य व्युत्क्रम्योत्क्रम्य सन्धिमत्

यथावत्स्वरसंयुक्तं प्रयुञ्ज्यात्सा जटा मता ६
न्यायादनुग्रहाद्यच्च दृष्टान्ताद्यत्तदुच्यते
विलोमे न्यायतः प्राप्तस्सन्धिरित्यभिधीयते ७
यत्रार्षेऽनुद्धृतसन्धिर्जटायामुद्धवेद्यदि
तद्ब्राह्मणारण्यकोक्तसन्धिर्दृष्टान्त उच्यते ८
सकृदादिर्द्वितीयं द्विः पठेच्चादि पदं सकृत्
सन्धितः क्रमवच्चेति प्रोच्यते सा जटा बुधैः ९
त्रिक्रमस्य जटा ज्ञेया ह्युक्त्वा पूर्वं क्रमं तथा
पुनरुक्तं मध्यं चादिपुनराद्यन्तरं परम् १०
पदत्रयं समारुह्य त्रिक्रमे तु ससन्धिकम्
अवरुह्य यथान्यायं पुनरारोहणं स्मृतम् ११
त्रिक्रमे तु पदानां तु त्रयाणामवरोहणम्
तथैवारोहणं तेषां पश्चादाज्पूर्वमिष्यते १२
पदद्वयं षट्पदं च तथा नवपदं वदेत्
स्वरवर्णा विशेषे च विशेषे त्रिक्रमे क्रमात् १३
स्वरवर्णादभेदस्य यत्पदद्वितयस्य च
जटा विलक्षणैरुक्ताः क्रमोच्चारणमेव हि १४

इति परिभाषा

लोपालोपषत्वणत्वयत्वादेशागमादिषु
संहितां च यथा प्राप्तिर्जटायां तद्वदेव हि १५
यानग्नयोन्त्वतप्यन्तेऽन्यत्रपूर्वकृते यण
लोपाभावेनग्न इति निमित्तग्रहणं कृतम् १६

ग्रहणं त्वेकमुद्दिश्य पदं वै क्रियते यतः
तदन्यत्र तु न ग्राह्यं यज्ञटाभिमतैरिति १७
तथैवाश्वाजनीत्यत्राप्येकादेशे कृते ततः
आकारश्रुतिसंप्राप्तः तस्माल्लोपो विलोमके १८
तथेयातां ब्राह्मणायेत्योपेत्याक्षरसंहिता
तत्रापि पूर्वप्राबल्यादैकारोऽत्र न संभवेत् १९
छत्वे प्राप्ते शकारस्य वर्णश्लिष्टे ततः परम्
नकारः प्राकृतस्तस्माच्छ्नथद्वृत्रमिति स्थितिः २०
अनुशब्दे ह्युकारस्य वकारे वैकृते स्थिते
जटायां नैवलोपः स्यादकारस्येति निर्णयः २१
अनुशब्दे ह्युकारः स्याद्वकारे वैकृते स्थिते
जटायां लोप एव स्याद्यथासांहितमन्तरा २२
ह्रस्वा भाजान्तु सर्वेषां ह्रस्वता पूर्वपौरुषे
आदावन्ते च दीर्घः स्यान्मद्ध्ये उत्तरपौरुषे २३
यस्यार्षे प्रग्रहत्वञ्च तस्यैवानार्षे भवेत्
उक्तलक्षण भावेऽपि पौरुषे न भवेत्क्वचित् २४
प्रधानं वा निमित्तं वा द्विपदग्रहणं यदि
व्युत्क्रमे सर्वतो ग्राह्यं क्रमे तत्रैकदेशतः २५
पदद्वयन्निमित्तं यदेकाभावेऽपि तत्र तु
संहितावत् क्रमो ज्ञेयास्तद्वत् ज्ञेया जटा बुधैः २६
चादीनामेव लोपोमोलोपोक्यपि परस्य तु
उदः परस्सलोपस्तु तस्मिन्स्थास्तन्भुके सति २७

उत्पूर्वस्य सकारस्य व्यञ्जने लोप इष्यते
पूर्वत्र त्वन्वोः स्थितयोर्वलोपस्त्वव्यये स्थिते २८
लोपाभावे मकारस्य क्विबं ते राजतौ परे
तेषामेव प्रसिद्धत्वादविशेषेण सूचितम् २९
तेषामेव विलोमेऽपि नान्येषां सविधिस्मृतः
अवग्रहो मकारो यस्संसामिति न लुप्यते ३०
सविज्ञेय इति प्राज्ञस्ततोऽन्यत्रापि संभवेत्
यो लोपस्सोत्तरस्तिष्ठन्त्येकया ग्रहणे तथा ३१
इत्येकमिति मोलोपो न निमित्तमपेक्षते
पृक्तादपृक्ते दीर्घः स्याद्गुणो वर्णाद्भवेद्यदि ३२
तस्मात्तदुत्तरो दीर्घौ भवेदन्यत्र वागमः
अथवा देश ऊभावस्तत्तस्मात्सांहितेऽपि च ३३
आयोद्ध्वर्योक्रतो पूर्वो लोप स्यादप्यसांहिते
लुप्तो यदि भवेदार्षे क्रियते नान्यथा बुधैः ३४
षत्वणत्वस्वभावेषु यदुक्तमुपदेशतः
ग्रहणान्तत्करोत्येतत्कार्यं सर्वत्र नान्यथा ३५
संहितावत्क्रमो ज्ञेयो जटा च विकृतादिषु
विकारागमलोपेषु यथा सांहितकार्यभाक् ३६
निमित्तिप्रतिषेधे तु न निमित्तबलाद्विधिः
इङ्ग्यभेदे त्व संख्याने विधिर्न प्रतिषेधभाक् ३७
यथा पुनःकृधिबलान्न सत्वविधिरिष्यते
प्राधान्यात्पुनरित्यत्र निमित्तत्वात्कृधेरिति ३८

कृद्ध्युत्तरे पुनश्शब्दाद्विलोमे सत्वमिष्यते
नादध्वरञ्चेति सूत्रेणावग्रहस्थो निषिद्ध्यते ३९
सत्वेकारस्य पूर्वत्वाद्दीर्घस्याप्युपलक्षणम्
पत्नी वेग्रहणात्किं च ग्नास्पतिस्तत्र दर्शनात् ४०
उदथेत्यत्रदीर्घस्तु ह्रस्वस्याप्युपलक्षणम्
तथा प्रपर इत्यत्र ह्रस्वो दीर्घोपलक्षणम् ४१
धषवति निषेधस्याद्विश्वतः क्षत्रमत्र च
पदे चेङ्ग्यपदे नित्यन्नाविस्सूत्रे कृधीति च ४२
करवपेषन्तथा वर्णपूर्वं संयात्यवग्रहः
अत्र देवरिषश्चाविर्न्निरिद्धश्शश्वतोपसः ४३
यत्र स्यान्महिसृज्यदध्वं तत्र षत्वं न पौरुषे
ऋतवः प्रतिषेधाच्च महि सप्त च दर्शनात् ४४
ऋकाररेफयुक्तश्च निश्शब्दे वायुरेव च
षत्वमेव प्रसज्येत माहिषे येन भाषितः ४५
कण्ठोक्ताद्धिकयोर्यश्च विरोधः स्मर्यते क्वचित्
कण्ठोक्तस्तु बलीयान् स्यादाविश्शब्दस्तु साधकः
४६
अन्नारभ्यान्यमन्नञ्चेद्यत्र णत्वं प्रसज्यते
तस्मात्पार्याधिपूर्वेऽपि तथापि न वदन्ति हि ४७
संहितावद्विधिप्राप्तं बहवो न वदन्ति यत्
अद्ध्येतारो जटाकाले तद्वाह्लादृतमुच्यते ४८
शिक्षा च प्रातिशाख्यं च विरुध्येताद्बुधो यदि

शिक्षा दुर्बलमित्याहुस्सिंहीत्येवमृगी यथा ४९
प्रकृतौ प्रातिशाख्यं च बलवत्त्विति कीर्तितम्
शिक्षा बलवती चैव ह्यनार्षे सर्वसन्धिषु ५०
जटायां वक्ष्यमाणायां कम्पसन्धिस्वरादयः
अवधाय प्रयोक्तव्या निपुणेन द्विजेन तु ५१
न नूनं नृत्यन्ति न ह्यत्यप्यन्यशब्देन्न्य उच्चकः
नकारो द्वित्वगोलक्ष्यात्तकारोर्द्ध्वेऽपि वान्तकः ५२
टपूर्वस्य नकारस्य णत्वं कुर्याद्विचक्षणः
पूर्वं पश्चाट्टकारस्य यथावणमदर्शनात् ५३
सूत्रेष्वदृष्टं यत्किञ्चित्सूत्रान्तरबलाद्भवेत्
अनुक्तस्याविरुद्धस्य मतं ग्रहणमन्यथा ५४
टवर्गात्परभूतस्य लस्य दुश्लिष्टता भवेत्
अन्यथा चेद्विरामाच्च द्वित्वा भावाद्विरुद्ध्यते ५५
औत्वन्नोदौत्परेरमृत्यारं प्रोपावपूर्वके
अमिनन्तस्वपाठे च पदं स्यान्नो यथा षुषु ५६
यस्यैवार्षे यत्वरेफौ स्यातां तस्य हि पौरुषे
सति स्वरपरे तद्वन्निषेधो नान्यथा भवेत् ५७
यत्वरेफौ विनान्यत्र ग्रहणं दृश्यते यदा
षत्वणत्वादि सर्वत्र कर्तव्यमनुलोमवत् ५८
यत्र यत्र च यत्वं स्यात्तत्र तत्वन्तथा भवेत्
निषेधश्च जटायान्तु तत्र तत्वं तथा भवेत् ५९
आर्षे तु ग्रहणाद्यत्र प्रकृतिस्संहिता भवेत्

आद्यन्तयोर्जटायामप्यार्षत्वात्प्रकृतिर्भवेत् ६०
तथैव मिथुनीत्यत्र विलोमे यत्वमिष्यते
संहितायामभावाच्च मिथुन्यष्टौ च दर्शनात् ६१
स्तोमाय ज्योतिरित्यत्र षत्वं सस्य न विद्यते
अनवग्रहपूर्वत्वाद्द्विर्द्ध्यभावस्तथा सति ६२
अप्रसक्तिर्निषेधस्य न प्रतिप्रसवः स्मृतः
प्रतिप्रसवता यस्य षत्वं तस्यैव नान्यथा ६३
सुवोरोहावेति यश्च तत्र लुप्तो विसर्गकः
पुनर्ग्रहणसामर्थ्यात् ओत्वमाप्नोति रोत्तरे ६४
कृधि सुवस्वानासश्च दिव्यधित्यन्न दोषभाक्
अस्मिन्यज्ञे जटायाञ्च ह्यग्नयः पप्रयोफ्सुकः ६५

एतद्वचनमनिष्टम्

त्रिपदप्रभृतिन्यायो लोपालोपेषु विद्यते
तत्र स्थमन्ययुक्तं चेत्पूर्वधर्मो न विद्यते ६६
त्रिपदप्रभृतिल्लोपालोपयोरेव संभवेत्
न प्रग्रहेन यत्वादाविति वेदविदो विदुः ६७
एदोद्भ्यां वक्ष्यते तच्च यदनेकपदे पुनः
जटोच्यतेऽन्यशब्देन तत्रानैक्यन्न विद्यते ६८
प्रज्ञा तु क्रमतो ह्यादौ जटायान्दृश्यते यदा
अलोपलोपकार्याणि त्रिपदादौ तथोत्तरम् ६९
प्राधान्यस्य तृतीयत्वं त्रिपदप्रभृति स्मृतम्
ऋचि ब्राह्मणवाक्येषु ह्यलं द्वित्रिपदादिकम् ७०

पुनरुक्तं यतः पञ्च पदमित्युत्तरञ्च वा
पूर्ववद्भवति ज्ञेयं सर्वत्रापि विचक्षणैः ७१
परित्वा पुनरूर्जायन्नोस्य रातीयतोऽपि च
सप्ततेपो अनुत्वाग्ने त्वं गोमांश्चाधिरोचने ७२
चित्रञ्च भवतन्द्रफ्सस्सहस्वपुनरैक्यतः
पवस्व प्रतपास्सूर्ये परोऽग्ने च पुनस्तथा ७३
आयुर्यज्ञेनवाजश्च प्राणमेवायुरेव च
येनाग्नेऽस्मिन् सधस्थे च वाज्यद्ध्वनस्त्वनैक्यतः ७४
क्रम्याद्ध्वनो भवत्यग्रे पावकोऽर्पयतीति च
विषयेंगिर इत्येवाप्यग्र इत्यादि लुप्यते ७५
दधिक्रार्पणरक्षा च मर्यश्रीर्जनेवच
ता अस्य हिरण्यगर्भस्सञ्चारिण्यमनत्यपि ७६
अश्वाजन्यग्नयश्चैव अद्ध्वर्योऽथो अथो भवेत्
पुनरुक्तं यथोक्तं स्यात्पदपञ्चकमेव हि ७७
तथा ब्राह्मणवाक्येषु अलं द्विस्त्रिपदादिकम्
स्यात्तामविद्वानित्यत्रानुस्वारागमे यदि
अनार्षेनैव विज्ञेयोऽप्यप्यकारादिसंग्रहः ७८
द्यौरह इति तु यन्निमित्तं दृश्यतेऽत्र वै
णत्वं स्याद्भिन्नदेशीय स्थित्वा चैव न विद्यते ७९
अश्वाजन्यग्नयश्चैव जागरूकप्रदर्शनम्
श्रुतिग्रहणसामर्थ्यादात्रेयेणापि सूचितम् ८०
पदाक्षराङ्गवर्णानां द्विविधा पदसंहिता

इयं नानापदोक्ते च उच्यन्ते पञ्च संहिता ८१
संहिताञ्च पदं वापि क्रमञ्चैव जटां पठन्
लक्षणज्ञस्तथाप्नोति ब्रह्मस्थानं हि शाश्वतम् ८२
संहितापाठमात्रेण यत्फलं प्रोच्यते बुधैः
पदे तु द्विगुणं विद्यात्क्रमे तु च चतुर्गुणम् ८३
वर्णक्रमे शतगुणं जटायां तु सहस्रकम् ८४

तथा च गारुडपुराणे

विद्यानामुत्तमा विद्या वेदविद्या समीरिता
अतस्तददातुरस्यैव लाभस्वर्गापवर्गयोः ८५
विद्यानाञ्च पराविद्या ब्रह्मविद्या समीरिता
अतस्तद्दानतो राजन् सर्वदानफलं लभेत् ८६

देवीपुराणे

वेद एव द्विजातीनां साधनं श्रेयसः परम्
ततो स्याद्ध्यापनाभ्यासात्परं ब्रह्माधिगच्छति ८७
तमेव शीलयेत्प्राज्ञश्शिष्येभ्यस्तं प्रदापयेत्
तदभ्यासप्रदानाभ्यां परं ब्रह्माधिगच्छति ८८
योनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्
स जन्मन्येव शूद्रत्वमाशु गच्छति सान्वयः ८९
वेदविद्या विहीनस्य विद्याजालं निरर्थकम्
कण्ठरज्जुविहीनायाः कामिन्या भूषणं यथा ९०
अशिक्षितानां वेदेषु शास्त्राभ्यासो निरर्थकः
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ९१

भविष्यत्पुराणे

अपुत्रो लभते पुत्रमधनो लभते धनम्
विद्याद्ध्ययनसंयुक्तः परे ब्रह्मणिलीयते ९२

यजुर्वेदस्वरूपमुच्यते

यजुर्वेदः पिंगळाक्षः कुशमद्ध्यो बृहद्गळः
बृहत्कपालः कृष्णाङ्घ्रिस्ताम्रः काश्यपगोत्रजः ९३

संभवपर्वणि

कृत्वार्थांश्च प्रकाशद्भिर्यजुर्भिर्निर्मलस्वरैः
जटावर्णविभागज्ञैरुच्यमानाननेकशः ९४

अनुशासनिके पर्वणि नारदस्तोत्रे

संहितायां च सर्वस्यां स्थितस्योपस्थितस्य च
पदद्वयक्रमस्यापि जटायां च स पारगः ९५
यो जटामात्रवित् ब्रह्मसन्धिज्ञो विष्णुरुच्यते
ईश्वरस्सर्वसन्धिज्ञ इत्येवर्षिभिरीरितः ९६
जटावर्णक्रमाभ्यां ये विना वेदविनो दिनः
ते यान्ति नरकं घोरं यावदिन्द्राश्चतुर्दश ९७

जटामणिमूलं संपूर्णम्

Note:
The 99 numbered verses of Jaṭāmaṇi in the Hamburg manuscript have been renumbered for convenience to match the numbering in the Vedaravindamu edition of Jaṭāmaṇi with commentary.

Reference:
Jaṭāmaṇi, pages 117-124 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 4 folios.
Jaṭāmaṇi, Vedaravindamu, http://vedaravindamu.wordpress.com /2013/11/27/jataa-mani-text-with-commentary-jaṭa-maṇiḥ-savyakhya/.
Jaṭāvalli, pages 53-55 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 2 folios.